हेइष्टके योयमग्रेर्भागोहविर्लक्षणः त्वं दीक्षा देवताया आधिपत्यं स्थापितं स्मृतं ब्रह्मदेवानां प्रीतिकरं मत्रजातं ब्राह्मणजातिर्वायोपि त्रिवृदाख्यः सोमविशेषस्तत्सर्वं त्वमसि । हेइष्टके योयमिन्द्रभागो हविविशेषः यच्च विष्णोः परमेश्वरस्याधिपत्यं यदपिस्नृतंप्रीतिकरं बलं क्षत्रं क्षत्रियजाति वा योनिः पञ्चदशाख्यः स्तोमः तत्सर्वं त्वमसि । हेमनुष्याः सन्तः चक्षते वेदं व्यक्ताव्यक्तमुच्चारयन्ति तेनानृचक्षसऋत्विजस्तेषां भागो दाक्षिणरूपा गवादिधातुप्रभृतेर्यदाधिपत्यं यच्च स्मृतं प्रीतिकारणं जानजं जननशीलमन्नं तत्सर्वं त्वमसि । स्मृतः प्रीतिहेतुर्वातोवायुदिवः सकाशादागताद्वृष्टिश्चवपुष्पादगवाश्वादिगर्भाद्द्विपदां च पुष्पदां चादरगताः प्रीतिहेतवः आजोबलमष्टधातुर्वा योस्तु दिश्ववस्थिताः प्राणिनामनुकूलाः तादिशः समीच्यः युतामिश्री भवतः शुक्लकृष्णपक्षांववेति यवामासाः स तथाविधत्वादथवा अर्धमासाः ऋतुशब्दैवसामान्यवाचीगाणविशेषो विश्वेदेवाः भूतं निष्पन्नं प्रीतिकरं स्थानं हेइष्टकं त्वं तत्सर्वमसि ॥ कात्यायनः ॥ ऋतव्ये सहश्चसहश्चेति ॥ ॥ पाठस्तु ॥ **सहश्च सहस्यश्च हैमन्तिकावृतूअग्नेरतः श्लेषोसि कल्पनां द्यावा पृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथग्नमज्यैष्ठ्याय सव्रताः । येअग्नयः समनसोन्तरा द्यावा पृथिवी इमे । हैमन्तिकाऽऋतूः अभिकल्पमाना इदमिव देवाः अभिसम्विशन्तु तया देवतयाङ्गिरस्वद्ध्रुवेसीदतमिति** व्याख्यातः समानार्थः ॥ इतिपञ्चदशोऽध्यायेऽष्टमोनुवाकः ॥

अष्टमेऽनुवाकेऽवशिष्टानामक्ष्णयास्तोमीयानामिष्टकानामुपधानमन्त्रा उक्ताः॥ नवमे तु सृष्टिशब्दाभिधेयेष्टकोपधानमन्त्राः उच्यन्ते ॥ कात्यायनः ॥ सप्तदशसृष्टीरेकया स्तुवतेतिप्रतिमन्त्रमिति । सूत्रघतुयुक्तैर्मन्त्रैरुपधेया इष्टका सृष्टयः ता एकयास्तुवतत्यादिभिः सप्तदशभिर्मन्त्रैः क्रमेणोपदध्यादितिशेषः ॥ तेषां पाठस्तु ॥ **एकया स्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्ति सृभिरस्तुवत ब्रह्मा सृज्यत ब्रह्मणस्पतिराधिपतिरासीत् । पञ्चभिरस्तुवनभूतान्यसृज्यन्तभूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऋषयो सृज्यन्त धाताधिपतिरासीत् । नवभिरस्तुवत पितरो सृज्यन्तादितिरधिपत्यासोदेकादशभिरस्तु-**

षत ऋतवो सृज्यन्तार्तवाः अधिपतय आसन् । त्रयोदशभिर स्तुवतमासाः असृज्यन्त संवत्सरोऽधिपतिरासीत्पञ्चदशभिर-स्तुवनक्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत् । सप्तदशभिरस्तुवत ग्राम्याः पशवो सृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभि-रस्तुवत शूद्रार्या असृजेतामहोरात्रे अधिपत्नी आस्तां एकविं-शत्यास्तुवतैकशफाः पशवो सृज्यन्त सोमोऽधिपतिरासीदिति । अत्र निदानं पुरा प्रजापतिरिन्द्रियाधिष्ठातॄन्देवान् मांस्तुवध्वमित्यब्रवीत् । ते च देवाः केन स्तोष्यामह इत्यवोचन् । एवमुक्ताः प्रजापतिर्मया च युष्मा-भिश्च स्तुतिः करिष्यत इत्यादिकं सर्वं एतद्वै प्रजापतिरसृजादिके शतपथब्रा-ह्मणेऽनुसन्धेयम् । एकया वाचानं देवाः प्रथममस्तुवत । स्तुतिमकुर्वन् ततः प्रजापतिना प्रजा अधीपतिरासीत् । ततः पञ्चभिः प्राणादिभिरस्तुवत तदानीं पञ्चभूतानि सृष्टान्यभूवन् भूतानां पतिरितिकश्चिदेव विशेषः । अत्र स ए-वाधिपतिरासीत् । श्रोत्रे चक्षुषिनासिकेवागितियेसप्तशीर्षण्यातेसप्तभिरस्तु-वत । ततः सप्तर्षयः सृष्टा अभूवन् । धाता जगत्स्रष्टा यो देवः स एवा-धिपतिरासीत् । नवभिरस्तुवत । सप्तशीर्षण्याः द्वाववाञ्चाविति येनच प्राणाः तैरस्तुवत स्तुतिमकुर्वन् । ततः पितरोऽग्निष्वात्तादयः सृष्टाअदितिरेवं विधस्य प्रजापतेरखण्डितायानक्तिमैव तेषां सृष्टानां पितॄणां अधिपती स्वामित्वे-नाधिकं पालयित्र्यासीत् । दशप्राणा आत्मैकादशसंख्या कायास्तैःकृत्वा इन्द्रियाधिष्ठातारो देवाः प्रजापतिं स्तुतिमकुर्वन् । ततः ऋतवो वसन्ताद्याः सृष्टास्तेषामार्तवा ऋतुपालकाः केचिद्देवविशेषास्तएव स्वामिनोऽभुवन् । सद्दशप्राणा द्वौ प्रतिष्ठाख्यौ पादौ एकआत्मेति ये त्रयोदशसंख्याकादौरस्तु-वत । ततो मासाश्चैत्रादयः सृष्टामासाभिमानीयः संवत्सरः । तेषां स एवाधिपतिरासीत् । दशहस्त्यांगुलयश्चत्वारोदोर्बाहवः नाभेरुर्ध्वंयच्छ-रीरं एतैः पञ्चदशभिरस्तुवतः क्षत्रं क्षत्रियजातिः सृष्टाइन्द्रस्तदभिमानी दे-वस्तत्स्वाम्यभूत् । दशपादाङ्गुलयः कुरुद्वयमष्ठीवद्वयञ्च नाभेरर्वाग्यच्छरीरंएतैः सप्तदशभिरस्तुवत । तदा ग्राम्याः पशवः सृष्टास्तेषां बृहस्पतिस्तदभिमानी-स्वाम्यभूत् । दशहस्त्यांगुलयो नवप्राणास्तैर्नवदशभिः शूद्रार्यां शूद्रार्यौवैत्रे-श्यशूद्रौ सृष्टौ तयोरहोरात्रे स्वामित्वेनाभूताम् । हस्तगतादशांगुलयः । दशपादगताआत्मैकाविंशइति या एकविंशत्तिसंख्यास्तयास्तुवत । तत

एकशफा अश्वादयः पशवः सृष्टास्तेषां वरुणोऽधिपतिरासीत् । दशपात्पाद्द्वे-प्रतिष्ठ आत्मा त्रयोविंश इति या त्रयोविंशतिः संख्या तयास्तुवत । ततः शूद्रास्त्वजादयः पशवः सृष्टास्तेषां पूषस्त्वाभ्यासीत् । दशहस्तांगुलयो दश-पाद्याश्चत्वारः करचरणआत्मापञ्चविंशतिः संख्या तया स्तुतिमकुर्वन् तदा ह्यारण्याः कृष्णमृगादयः सृष्टास्तेषां वायुरधिपतिरासीत् । दशहस्त्यांगु-लयोदशपाद्याः सप्तशीर्षण्याः प्राणइति या सप्तविंशतिस्तयास्तुवत तत्र द्यावा पृथिव्यौ व्यैतां विशेषेणगच्छतां वसवोरुद्राआदित्याइति ये देवा अनुव्या-यन् अन्वागच्छत एव स्वामिनो सुवन् । दशहस्त्यम् । अङ्गुलयोदशपा-द्यात्रयत्रप्राणा इति । या तयाऽस्तुवत ततो वनस्पतयस्तत्र सोमोऽधिपतिरासीत् । दशहस्त्याङ्गुलयो दशपाद्याप्राणा आत्मैकत्रिंशतयालाइतियत् तेनैवास्तुवत । ततः प्रजाः सृष्टास्तासां प्रजानां यवाः पूर्वपक्षाः । अयवाः । अपरपक्षा-श्चाधिपतये आसन् दशहस्त्यांगुलयोदशपाद्यारशःप्राणाद्वेप्रतिष्ठ आत्मायं-यस्त्रिंशइत्येतेनाऽस्तुवत ततः सर्वाणि भूतान्याशाम्यन् । सर्वे प्राक्तिनः शांता अभूवन् । परमे सत्यलोके तिष्ठतीतिपरमेष्ठी प्रजापति ॥ सर्वेषां भूतानां सएवाधिपतिरासीत् । अत्र यायैका येन येन मन्त्रेणोपधेयात् तादिष्टकानत्तत्पंत्रप्रतिपादकदैवतारूपत्वेन प्राप्तेत्यर्थः ॥ ॥ कात्ययनः ॥ लोकं पृणाः पूर्ववत् । लोकं पृणसंज्ञकाः इष्टकाः पूर्ववदुपदध्यात् ॥ तन्मन्त्रप्रतीकपाठस्तु ।

लोकं पृणत्ता अस्येदं विश्वा पूर्ववद्याख्येयम् ।

इतिपञ्चदशोऽध्यायेनवमोऽनुवाक ॥

वेदार्थस्यप्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थाँश्चतुरो दद्याद्विद्यातीर्थ महेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपा-लसाम्राज्यधुरंधरेण सायणाचार्येणविरचितेमाधवीये काण्वसं-हिताभाष्ये वेदार्थप्रकाशे पञ्चदशोऽध्यायः ॥ १५ ॥

# अथ यजुर्वेदकाण्वमन्त्रभाष्ये षोडसोऽध्यायः ॥ १६ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहंवन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पंचदशोऽध्याये द्वितीयतृतीयचतुर्थचितिविषयऽष्टका मंत्रा उक्ताः ॥ षोडशे तु पंचमचितिविषयेऽष्टका मन्त्रा उच्यन्ते । कात्यायनः । पंचम्या सपत्ना अग्ने जातानिति प्रतिमंत्रमिति । पंचम्यां चितौ प्रथमं असपत्नाख्या इष्टका अग्ने जातानितिपञ्चभिर्मंत्रैः क्रमेणोपदध्यात् । । तत्र प्रथममंत्रपाठस्तु । । अग्ने जातान्प्रणुदानः सपत्नान् प्रत्यजातान्जातवेदानुदस्व । अधिनो ब्रूहिंसुमनाअहेलं॑स्तवस्याम त्रि-वंरूत्युउभ्दाविति । हे अग्ने नोऽस्माकं जातान् सपत्नान् येपूर्वमुत्पन्नाः शत्रवस्तान् प्रणुद प्रकर्षेण नाशय । किञ्च हेजातप्रज्ञाग्नेपूर्वमुत्पन्नाः इतः परमुत्पत्तिप्रशक्तियुक्तास्तान् जातान् शत्रून् प्रतिनुदस्व उत्पत्तिप्रतिबंधेन निराकुरु । सुमनाः सानुग्रहचित्तस्त्वं अहलंनुद्बुध्यं नोऽस्माकं अधिब्रूहि । अत्र यज्ञे इति कर्तव्यतानुपादिशा । उभ्दौ भा दीप्तौ पशुधनधान्यादिभिरुभ्दि-घनइत्युभ्दिः । तस्मिन् शर्मन् शर्मफि सुखाऽत्रयभूते भादीप्तौ शत्रुधनधन्या-दिभिरुभ्दीयत इत्युभ्दिः । तस्मिन्नुभ्दौ । त्रिवरुत्थेगार्ग्यंत् । सदोहविधान रूपे यज्ञगृहे नत्रप्रमादात् वयं स्याम सुखिनो भवेम ॥ ॥ अथद्वितीयः ॥ स-हस्य जातान्प्रणुदानः सपत्नान्प्रत्यत्तान्नुदजातवेदः । अधिनोब्रू-हिसुमनस्यमानो वय॑स्यामप्रणुदानः सपत्नानिति सहसा वलेन जातान्स्वशास्या उत्पन्नान् नः शत्रून् प्रणदा हेजातवेदः अजाताश्च प्रतिनुद-किंचसुमनस्यमानः अस्मासु सौमनस्य प्राप्तः सन् नोऽस्मानधिब्रूहि शत्रुभ्यो-धिका । त्वद वयमपि त्वदनुग्रहादधिकाः स्याम । नोऽस्मदीयान् सपत्नान् शत्रून् प्रणुद । भूयोभूयः प्रणुदेत्यर्थः ॥ ॥ अथतृतीयः ॥ ॥ षोडशी-स्तोमओजोद्रविणोमिति । षोडशभिरावृतिभिरुपेतः षोडशीयस्तादृशः स्तोमः । यच्च ओजो द्रविणं वलरूपं धनं हेइष्टके तदुभयरूपात्वमसि ॥ ॥ अथचतुर्थः ॥ ॥ चतुश्र्चत्वारिं॑शस्तोमोवर्चो द्रविणामिति । योयं स्तोश्चमतुश्चत्वारिंसदा-वृत्या सम्पन्नः यच्च बलरूपं धनं हेइष्टके तदुभयरुप त्वमसि ॥ ॥ अथपञ्चमः ॥ ॥ अग्नेः पुरीषमस्यप्सोनामतां त्वा विश्वे आभिगृणंतु देवाः । स्तोमपृष्ठा

धृतवतीहसीदप्रजावदस्मेद्राविणा यजस्वेति हेइष्टके त्वं अग्नेः पुरीषमसि पूरयित्री भवसि । अप्स इति भक्षयति विनाशयतीतिक्षः । नक्षातीत्यक्षः । योऽग्निः तादृशनायास्ति तस्याग्नेरित्यर्थः । इतरो व्याख्यातसमानर्थः ॥

॥ कात्यायनः ॥ ॥ विराजो दशदशैव छंद इति प्रतिमंत्रमिति विराट्संज्ञकाश्चत्वारिंशदिष्टकास्ताः प्राच्यादिसूक्रमेण दशदशोपदध्यात् ॥

॥ तेषांपाठस्तु ॥ ॥ रावश्छंदोवारिवश्छन्दः शंभूश्छंदः शंभूश्छंदः परिभूश्छंदः आछछंदोमनश्छंदो व्यचश्छंदः सिन्धुश्छंदः समुद्रश्छंदः सरिच्छंदः । ककुप्छंदः । ककुप्छंदास्त्रिककुप्छंदः काव्यं छंदोअंकुपछंदः । अक्षरपंक्तिश्छंदः पदपंक्तिश्छंदो विष्टारपंक्तिः श्छंदः आछछंदोः संपछंदो विपछंदः बहछंदो । थंतरंछंदोनिकायश्छंदोविवधश्छंदः । गिरश्छंदो भ्रजश्छंदः संस्तुप्छंदोऽनुष्टुप्छंदः । रावश्छंदोवरिवश्छंदो वयश्छंदो वयस्कृछंदः विष्पर्धाश्छंदो विशालं छंदश्छदिश्छंदोदूरोहणंछंदः गिरश्छंदो भ्रजश्छंदः संस्तुप्छंदोऽनुष्टुप्छंदः एवश्छंदो वरिवश्छंदो वयश्छंदो वयस्कृछंदः । विष्पर्धाश्छंदो विशालंछंदश्छदिश्छंदोदूरोहणं छंदः । तंद्रंछंदो अंकांकं छंद इति ।

राति गच्छत्यस्मिन्सर्वः प्राणिनिकाय इति । एवं पृथिवीलोकः स एव छंदोरूपेण स्थितत्वाच्छदकत्वाच्छदः । हेइष्टके त्वं तदुपासीतिशेषः । एवमुत्तरेष्वपि योजना वारिवः प्रभामण्डले नाव्रियत इतिवरिवोंतरिक्षे तदेव छन्दः शम्भूः शान्तिरतिशयसुखं अस्याङ्भवतीति शम्भूर्द्युलोकः परितो भवति व्याप्य वर्तते इति व्युत्पत्त्या परिभूः शब्दो दिग्वचनः । आछादयति आत्मा येन रसेन सर्वे शरीरमित्याछत् अन्नं प्रथमस्टुं प्रजापत्यात्मकं यन्मनस्व देवछदः । विचानिव्याप्तिकर्माविवतिव्याप्नोति सर्वजगदितिव्यचोसावादित्यः स्पंदति नदीशरीरं व्याप्नोतीतिसिन्धुः प्राणो वायुः समुद्रवत्यस्मादिकल्पजातानीति समुद्रं मनः । यद्वा समुद्रा यथा सर्वाभिर्नदीभिः पूरितोपि पर्याप्तिं न प्राप्नोति । तथा शब्दस्पर्शादिविषयैरनुभूयमानैस्तृप्तिं न प्राप्नोतीति समुद्रसाम्यात् । समुद्रमेवमनः शरीरदनुगह्वरान्निर्गछतीति शरीरं वाक् । कं सुखं स्तभाति शरीरे धारयतीति ककुप् ककुप् प्राणः मेधा कंपितमुदकं सुभाति पिबतीति त्रिककुप् पयदानः । वयात्मकः

शब्दकाव्यं । अं कुपं अक भगकुटिलायां गतौ कुटिलगत्या आप्नोतीत्यकुपं उदकं अक्षरनाशरहिता नक्षत्राणां परावलिर्यस्याः सा द्यौरक्षरपङ्क्तिः पदानां पङ्क्त्यो यस्मिन्सोयं भूलोकः पदपङ्क्तिः विस्तारिता । आपणे प्रसारिता वस्तूनां पङ्क्त्यो यस्याः सा वैश्यजातिः विष्टारपङ्क्तिः एवं क्षुरोभ्रतप्रभृतीनां सुवरेषां छन्दसां यौगिक्या व्यावृत्याप्यर्थान्तरेषु वृतिः शतपथब्राह्मणादवगन्तव्या यद्वा गायत्र्यादिवदक्षरसंख्या निष्पाधातिच्छन्दोन्तरण्यत्र एवोत्तरिविड्इत्यादिभिर्नामभिः प्रतिपाद्यन्ते । नानिवैच्छन्दाᳪसि सुवर्ग्यप्यासंस्तैर्देवाः सुवर्गलोकमायन्निति तैत्तिरीयश्रुत्या तेषामेव प्रभृतीनां छन्दसां स्वर्गसाधनताऽस्तानात्र । अत्रेष्टकासु तद्रूपेण श्रुतिः ॥

इति षोडशोऽध्याये प्रथमोऽनुवाकः ॥

प्रथमेऽनुवाके अलपलादीष्टकोपधानमन्त्रा उक्ताः ॥ द्वितीये लोकाभागेष्टकौपधानमन्त्रा उच्यते ॥ कात्यायनः ॥ स्तोकभागारश्मिना सत्यायेति प्रतिमन्त्रमिति अस्यानुवाकस्य स्तोत्राभ्यनुज्ञायते विनियोगात्त्रिवृदादिस्तोम सम्बन्धात्स्तोमा इति वान्यास्तोमभाग एतदनुवाकसंबन्धिनो मन्त्राः । तदुपधेया इष्टकाश्च तथैव व्यपदिश्यन्ते । तास्त्रिंशादिष्टका अनेनानुवाकेन प्रतिमन्त्रमुपदध्यादित्यर्थः ॥ तत्पाठस्तु ॥ रश्मिनासत्यायसत्यञ्जिन्व प्रेतिनाधर्मणाधर्मञ्जिन्व । अन्वित्यादिवादिवञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व । प्रतिधिना पृथिव्यापृथिवीञ्जिन्वविष्टम्भेनवृष्ट्या वृष्टिञ्जिन्व । प्रवयाह्नाहर्जिन्वानुयारात्र्यारात्रीञ्जिन्व । नुशिजावसुभ्योवसूञ्जिन्वप्रकेतेनादित्येभ्य आदित्याञ्जिन्व । तन्तुनारायस्पोषेणरायस्पोषञ्जिन्व सᳫंसर्पेण श्रुतायश्रुतंजिन्व । ऐडेनौषधीभिरोषधीर्जिन्वोत्तमेनतनूभिस्तनूर्जिन्व । वयोधसाधीतेनाधीतं जिन्वाभिजितातेजसातेजोजिन्व । प्रतिपदसिप्रतिपदेत्वानुपदस्य नुपदेत्वा । संपदसिसंपदेत्वातेजोसितेजसत्वा । त्रिवृदसित्रिवृतेत्वाप्रवृदासिप्रवृतेत्वा । विवृदसिविवृतेत्वासवृदसि सवृतेत्वा । आक्रयोस्याक्रमायत्वासंक्रमोसि संक्रमायत्वा । उत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्युत्क्रान्त्यैत्वा । अधिपतिनोर्भोर्जञ्जिन्वचेपश्रीःक्षत्रायक्षत्रंजिन्वेति । हे इष्टके त्वं रश्मिना तेजोरूपेणान्नेन सत्वाभिमानिदेवतार्थं सत्यं जिन्वन प्रीणय रश्मिर-

न्नमिति श्रुतेः । प्रेतिना प्रकर्षेण देहमेति गच्छतीति प्रेतिरन्नं तेन धर्मं जिन्व प्रीणय । प्रेतिरन्नमिति श्रुतेः । किमर्थं धर्मणा । अत्र विभक्तिव्यत्ययः । धर्माय धर्मार्थम् । अन्वित्या अन्नेन । अन्वितिरामति श्रुतेः । दिवं द्युलोकं जिन्व तर्पय दिवाद्युलोकार्थं सन्धिना सम्यक् बलादिकं धीयतेऽस्मिन्निवित्तसधिरन्नं तेन अन्तरिक्षं जिन्व । अन्तरिक्षेण अन्तरिक्षार्थं प्रतिधिना प्रतिधीयतेऽस्मिन्निति प्रतिधिरन्नं तेन पृथिव्या पृथिव्यै पृथिवी अन्नेदेहादिविष्टम्भननिमित्तत्वात् । विष्टं भोन्नं तेन वृष्ट्यै वृष्ट्यर्थं वृष्टिं जिन्वन्नम् । प्रवया प्रवाप्यत इति प्रवान्नं तेन अह्ना अह्ने अहर्जिन्व । देहान्तर्यगतद्वारा प्रतिनाडीरन्वीयतेऽनुगच्छती सन्वी अन्नन्तया अन्वा अनुयेति छान्दसं रूपं राज्या राज्यभिमानि देवार्थं रात्रिं जिन्वनुशिजासर्वै काम्यमानत्वादुशमन्नं तेन वसुभ्योऽर्थाय वसून् जिन्व प्रकेतेन प्रकर्षेण कं सुखर्हयते अन्नेनेति केतमन्नं तेन आदित्येभ्योऽर्थाय आदित्यान् जिन्व । तन्तुना जन्यते विस्तार्यते इतितमुरन्नं तेन रयस्योषेण रायो धनं पुष्ट्यर्थं नुपहितासती रायस्योषञ्जिन्व । संतृप्यते गम्यते इतस्ततो पदार्थसंसर्पोन्नेन । श्रूयेत इति श्रुतं जिन्व । ऐलेन इरान्नं तस्य इदं ऐलन्तेन औषधीभिरोषधीभ्य ओषधीर्जिन्वोत्तमेनोत्कृष्टेनान्नेनतनूभिस्तनूर्जिन्व । वयोधसावयः शरीरावस्थान् मेधते पोषयतीति वयोधोन्नम् । तेनाधीतेनाधीसर्थं आधीतं जिन्व अभिजिता सर्वजयहेतुरन्नयभिजित् । तेजसा तेजसे तेजो जिन्व येन जीवनं प्रतिपद्यत इति प्रतिपदन्नं । हे इष्टके यतस्त्वं तादृग्रूपासि तदर्थं त्वां उपदधामीतिशेषः । प्रतिदिवसमनुपद्यत इत्युपदन्नं । हे इष्टके यतस्त्वंतादृग्रूपासि तदर्थं त्वामुपदधामीतिशेषः । संपदसि हेइष्टके त्वं तद्रूपासि । तदर्थं त्वां उपदधामि । अन्नं वै संपदिति श्रुतिः । तेजः कारणत्वातेजोन्नं त्रिधा वर्तत इति त्रिवृत् । अन्नम् । प्रकर्षेण प्रवर्तत इति प्रवृत् अन्नम् । विशेषेण वर्तत इति विवृदन्नम् । समेनवर्तत इति सवृत् अन्नम् । क्षुधाक्रामतीति आक्रमोन्नम । देहस्य सर्वावयवत्वासंक्रमत इति संक्रमोन्नं अपस्रोतपस्यर्थञ्च तादृग्रूपेणोत्कामन्तीत्युत्क्रमोन्नं उत्क्रान्तिरुत्कृष्टगमनं यस्यान्नस्य अधिपतिना अधिकं पालनेन ऊर्जान्नरसेन कुर्जञ्जिन्वत्रेषश्रीर्वेषस्य शोभा यस्य तदन्नक्षात्रा आयत इति क्षत्रमन्नं तदर्थं क्षत्रं जिन्व ॥

इति षोडशेऽध्याये द्वितीयोऽनुवाकः ॥

द्वितीयेऽनुवाके लोकभागमन्तं इष्टका उक्ताः ॥ तृतीयेऽनुवाकेनाकस्वदाख्या इष्टका उच्यन्ते ॥ कात्यायनः ॥ नाकसदोराराअसीति प्रतिमंत्रमिति नाकः स्वर्गसंपद्यते यैर्मंत्रैस्तेनाकसदः । तथाच मंत्रलिंगं नाकस्य पृष्ठे स्वर्गे लोके यजमानं वसादयंतु तैर्मंत्रैरुपधेया इष्टका । अणिनाकसद इसस्यते ॥ तथाच प्रथममंत्रपाठः ॥ राज्यसि प्राचीदिग्वसवस्ते देवाऽअधिपतयः । अग्निर्हेतीनां प्रतिधर्ता । त्रिवृत्वास्तोयः पृथिव्या ऽअयत्वाज्ययुक्थामव्यथायैस्तन्नातुरतरथंऽसाम प्रतिष्ठित्वा अन्तरिक्षे । ऋषकस्त्वाप्रथमजा देवेषु दिवोमात्रया वरिम्णाप्रथन्तु । विधर्ता चायमन्धिपतिश्च तेत्वासर्वेसंविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति । हेइष्टके राजीराजमानाया प्राचीदिक् त्वंतदूपासि । ते तव वसवोऽष्टसंख्याकादेवा अधिपतयो अधिकं पालयितारः । अग्निस्त्वोपद्रवकारिणीनां परकीयायुधानां प्रतिधर्ता निराकर्ता योऽयं त्रिवृदाख्यः स्तोमः स त्वां पृथिव्यां अयतु स्थापयतु यदा ज्यमुक्थं आज्यनामकं मवो देवायाग्रे इसादिकं शस्त्रयस्थित्वाय व्याप्यायै चलरहितायस्त्रन्नातुदृढीकरोतुंअतिरक्षे लोके प्रतिष्ठित्यो प्रतिष्ठापनाय रथं तरं सामत्वां स्त्रन्नातु । देवेषु मध्ये प्रथमभावेन ऋषयः प्राप्याः । प्राणा वा ऋषय इतिश्रुतेः । यद्वा ऋषयो नारदाद्या अतएव स्मर्यते । देवर्षिर्नारदस्तथेति । एवं भूता ऋषयस्त्वा त्वां दिवो मात्रया आकाशस्य यत्परिमाणे तेन परिमाणेन प्रथंतु विस्तारयंतु । कीदृश्यामाष्ठ्यावीरिम्णा श्रेष्ठया न केवलमृषयः । प्रथयंतु किंतु विमूर्ता चायमधिपतिश्च योयमिष्टकानां निष्पादयिनायश्च पालस्नात्वपि प्रथमतां । यद्वा अयं विधर्ता विशेषेण धारयिता तव पोषयिता वागभिमानदेवः अधिपतिः प्रधानभूतो मनोऽभिमानी देवश्च प्रथयतामिति यावत । ते सर्वे दिगाग्नि वस्वादयः संविदानाः परस्परयैकमत्यं प्राप्तानाकस्य पृष्ठे स्वर्गसदृश्य क्षेत्रस्योपरि त्वां त्वां सादयतु । एतत्फलभोगार्थयजमानश्च स्वर्गे लोके सादयंतु । एवमुत्तरेष्वपि मंत्रेषु योज्यम् ॥

अथद्वितीयः ॥ विरालसिदक्षिणादिग्रुद्रास्ते देवा आधिपतयः । इंद्रो हेतीनां प्रतिधर्ता । पंचदशस्त्वास्तो यः पृथिव्याः ऽश्रयतु प्रउगमुक्थमव्याथायैस्तन्नातु । बृहत्सायप्रतिष्ठित्या अन्तरिक्षे ।

ऋषयस्त्वाप्रथमजा देवेषु दिवो मात्रया वरिम्णा प्रथंतु । विधर्ताचायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानंश्च सादयंत्विति ।

स्तोमाः सामानि रात्ते सूर्यप्रकारेण व्याख्यातानि । वायुरग्रेगा इत्यादिकं शस्त्रं शिष्टं समानम् ॥

अथ तृतीयः ॥ सम्राडसि प्रतीचीदिगादित्यास्ते देवा अधिपतयः । वरुणो हेतीनां प्रतिधर्ता । सप्तदशस्त्वास्तोमः पृथिव्याᳪश्रयतु वैरुत्वतीयमुक्थमव्यथायैस्तभ्नातु । वैरूपᳪसामप्रतिष्ठित्या अन्तरिक्षे । ऋषयस्त्वाप्रथमजा देवेषु दिवोमात्रयावरिम्णा प्रथतु ॥ विधर्ताचायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गलोके यजमानं च सादयन्त्विति ।

इदं वसो सुतमन्धनु इति मरुत्वतीयं शस्त्रम् ।

अथ चतुर्थः॥ स्वराडस्युदीचादिङ्मरुतस्ते देवाऽ अधिपतयः। सोमो हेतीनां प्रतिधर्ता । एकविᳪशस्त्वास्तोमः पृथिव्याᳪश्रयतु निष्केवल्यमुक्थमव्यथायैस्तभ्नातु । वैराजᳪसमाप्रतिष्ठित्वा अन्तरिक्षे । ऋषयस्त्वाप्रथमा देवेषु दिवोमात्रया वरिम्णा प्रथतु । विधर्ताचायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्विति । अभित्वशूरनोनुमसादिकं शस्त्रं निष्केवल्यम् ॥

अथ पञ्चमः ॥ अधिपत्न्यसि बृहतीदिग्विश्वेते देवा अधिपतयः । बृहस्पतिर्हेतीनां प्रतिधर्ता । त्रिणवत्रयस्त्रिᳪशौत्वास्तोमौ पृथिव्याᳪश्रयतो वैश्वदेवोग्नि मारुते नुक्थेऽअव्यथायैस्तभ्नाताम् । शाक्वररैवते सामनीप्रतिष्ठित्याऽ अन्तरिक्षे । ऋषयस्त्वाप्रथमजा देवेषु दिवोमात्रयावरिम्णा प्रथंतु । विधर्ताचायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठस्वर्गे लोके यजमानं च स्यादयंत्विति । अधिपत्नीपलयित्री अधिपत्नी बृहतीदिक् प्रौढाऊर्ध्वादिक् । तत्सवितुर्वृणीमह इत्यादिकं शस्त्रं वैश्वदेवं वैश्वानराय पृथुपाजसमित्यादिकं शस्त्रमग्निमारुतम् । शिष्टं व्याख्याताभिप्रायमेतत् । अतो यान्युदाहृतानि आज्यादिस्यस्त्राधि नान्याश्वलायनो दर्शयति ।

भ्रवामहेत्याज्यमुपशंसनुयादिति । वायुरग्रेण । यज्ञमीरिति । समानां पुरोरुचा नस्यास्सतनुपरिष्टात्पूर्वंशासिद्रा यवो हि ससतृचाद्वितीयां मनुगत्रिरितिमह- त्त्वतीयशस्त्रं शंसेदध्वर्यवोमिति माध्यन्दिनेशस्त्रादिन्द्राहाववर्जत्वारथं यथोतय इन्द्रसो सूनमन्थ इतिमरुत्वतो यस्य प्रतिपदनुचराविति निष्केवल्यस्याभि- त्वाशूरनोनुमोभि त्वपूर्वपीतय इतिप्रगाथौस्तोत्रियानुरूपौ यदि रथन्तरं मष्ठामिति तत्सवितुर्वृणीमहे ह्यानोदेवसवितरिति वैश्वदेवस्य प्रतिपदनुचरा- विति स्वभ्यग्रमाग्निमारुतं तस्यामागच्छयावायवच्छशस्त्राचेदग्रेचंसइस्नसन्तान- मुन्नमेन वचनेन वैश्वानराय पृथुपाकसंस्तुतिः ॥ ॥ इति षोडशोऽध्याये तृ- तीयोऽनुवाकः ॥

तृतीयेऽनुवाके सदाख्या इष्टका उक्ताः ॥ ॥ चतुर्थे पञ्चचूडाख्या इष्टका उच्यन्ते ॥ ॥ कात्यायनः ॥ ॥ अयं पुर इति पञ्चचूडाः प्रतिमन्त्र प्रतिदिश- मिति । याः सर्वासामिष्टकानां शिखास्थानीयाः । तानुपदध्यादित्यर्थः ॥ तत्र प्रथममन्त्रपाठस्तु ॥ ॥ अय पुरो हरिकेशः सूर्यरश्मिस्तस्य रथ- गृत्सश्च रथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थला चाक्षरसौ यशावो हेतिः पौरुषेयो वधः प्रहेतिः । तेभ्यो नमो अस्तुते नो मृडयन्तुते नोऽवन्तु । तेयं द्विष्मो यश्च नो द्वेष्टि तमेषां ज- म्भेदध्म इति । हरिकेशः हिरण्यवर्णाकेशमाना ज्वाला यस्यासौ हरिकेशः सूर्यरश्मय इव रश्मयो यस्यासौ सूर्यरश्मिः एवम्भूतो योऽयमिष्टकारूपोग्निः पुरः पूर्वस्यां दिशि अवस्थापितः । तस्याग्रे रथगृत्सः रथगृत्सो मेधावी रथ- युद्धकुशल इत्यर्थः । रथे ओजो बलं यस्य स रथौजाः । चकारौ समुच्चया- र्थौ । राजन्नामकौ । सेनां नयतीति सेनानी । ग्रामं नयतीति ग्रामण्यौ वा सन्ति कौ मासौ परिचारकौ तथा पुंजीकुरूपलावण्यसौभाग्यगुणस्थलापुञ्जि- कस्थला । क्रतूनां सङ्कल्पानां स्थलमिव स्थिता क्रतुस्थला एतदाख्ये दि- गुपदिगुपदिगूपद्वेप्सरसौ परिचारिकदंक्ष्णवः पशवो दंशनशीला व्याघ्रादयः पौरुषेयः तुरुषसम्बन्धिहेतिरायुधं वधे हननशीलः । एवं भूतो हेति रप्यायु- धविशेषौ । यस्याग्रे रिदं सर्वमस्ति । हेइष्टके त्वं तदग्निस्वरूपासीत्यर्थः । योयमग्निर्यौचसेनानी ग्रामण्यौ येचाप्सरसौ येतहेति महेती तेभ्यः सर्वेभ्यो नमो अस्तुते सर्वेनोऽस्मान्मृडयन्तु सुखयन्तु । तेनेऽस्माननन्तु रक्षन्तु । यं वैरिणं ते वयं द्विष्मः द्वेषं कुर्मः । यश्च वैरीणोऽस्मां द्वेष्टि तं वैरिणं एषां हेतिमहेसा-

दीनां जंभे दंष्ट्राकराले दध्मः स्थापयामः ॥ ॥ अथ द्वितीयः ॥ ॥ अयं दक्षिणीयश्चक्रर्मा तस्य रथस्वं नश्च रथे चित्रश्च सेनानी ग्रामण्यौ मिनका च सहजन्याचाप्सरसौ यातुधानाहेतीरक्षाꣳसि प्रहेतिः । तेभ्यो नमो अस्तु ततो मृडयन्तु तेनोवन्तु । ते यद्विष्णेभ्यश्च नोद्वेष्टि तमेषां जम्भे दध्म इति ॥ विश्वानि कर्माण्यग्निहोत्रादीनि यस्य सोयमग्निर्विश्वकर्मा तस्य दक्षिणादक्षिणस्यां दिशि स्थितस्य रथश्वनः सेनानीः रथचित्रो ग्रामणीः मानयते मां तेना इति येना समाना जनानां सहजन्या मेनकेति सहजन्येति चाप्सरसो नामधेयम् । यातुधाना रक्षांसि चेत्यवान्तरजातिभेदोऽवगन्तव्यः । हेति प्रहेती अप्यायुधविशेषौ । तत्र यातुधानाः क्रूरास्तीण्वाहेति स्वरूपाः रक्षांस्यतिक्रूराणि अतितीक्ष्णप्रहेतिस्वरूपाणि । तस्यग्नेरिदंसर्वं द्वेष्टकेतदाग्निस्वरूपासीत्यभिप्रायः । शिष्टं व्याख्यातम् ॥ ॥ अथ तृतीयः ॥ ॥ अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ । प्रम्लोचन्तीचानुम्लोचन्तीचाप्सरसौव्याघ्राहेतिः सर्पाः प्रहेतिः । तेभ्यो नमोऽअस्तुते नो मृडयन्तुते नोऽवन्तु । तेयंद्विष्मो यश्च नोद्वेष्टि तमेषां जम्भेदध्म इति॥ विश्वं व्यवाति अव्याप्नोतीति विश्वव्यचाः सोऽयमग्निः पश्चात् प्रतीच्यां दिशि वर्तते । तस्य रथप्रोतः रथऽत्रस्थितैः श्रोतश्च असमरथरन्यैरनभितुल्यः। प्रम्लोचन्तीपुमांसं प्रत्यात्मानं दर्शयन्ती स हि तस्या स्वभावः । अनुम्लोचन्ती स एवार्थः स रमन्यत्पूर्ववद्व्याख्येयम् ॥ ॥ अथचतुर्थः ॥ ॥ अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टने मिश्चसेनानीग्रामण्यौ विश्वाचीचघृताचीचाप्सरसा आपो हेतिर्वातः प्रहेति । तेभ्यो नमोऽअस्तु तेनोमृडयन्तु तेनोऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म इति ॥ सम्यक् प्राप्तं वस्तुधनं यस्याग्नेः सोऽयं संयद्वसुः सोऽग्निः उत्तरादुत्तरस्यां दिशि वर्तते । तार्क्ष्यः तीर्णेऽन्तरिक्षे क्षियति निवसतीति तार्क्ष्यः अरिष्टनेमिः । अनुपहिंसितायुधः । विश्वाचीति प्रत्यचरशीलाघृताची । घृतश्च ना । घृतं वैदघृक्तस्त्यमन्नम । आपो वातहेतिः । शेषं पूर्ववत् ॥ ॥ अथ पञ्चमः ॥ ॥ अयमुपर्यर्वाग्वसुस्तस्य सेनतिश्च सुषेणश्चसेनानी ग्रामण्यौ । उर्वशीच पूर्वाचितिश्चाप्सरसा अवस्फूर्जद्धेति विद्युत्प्रहेतिः । तेभ्यो नमो अस्तु तेनो मृडयन्तु ते-

नोवन्तु । वयं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः इति ॥ अर्वाग्वसु रथोमुखत्वेन वसनात् मेघादूभूमौ पततद्विद्युतोऽग्निस्तस्यस्येत्युच्यते । सचोपर्यूर्ध्वायां दिशि वर्तते । तस्याग्नेः सेनां जयतीतिसेनजित् । सेनानाः शोभना सेना यस्यासौ सुषेणोग्रामणीः तुरुः पृथुः कामो वरो यस्याअसौ-त्युर्वशीरूपलावण्यातिशयात्पूर्वमेव पुरुषाणां चित्रमभ्युपैतीति पूर्वचितिः । एतेऽप्सरसौ नुभयहेतुः । शब्दविशेषे अवस्फूर्जन् स्फूर्जतिर्वज्रनिर्घोषः भय-हेतिः प्रकाशो विद्युत् । एतावपि प्रतिहेतिरूपाऽयुधविशेषौ । शेषं स्पष्टम् । इति षोडशेऽध्याये चतुर्थोऽनुवाकः ॥

चतुर्थेऽनुवाके चूडाख्या इष्टका उक्ताः ॥ ॥ पञ्चमे छन्दस्या इष्टकानु-च्यन्ते ॥ ॥ कात्यायनः ॥ ॥ छन्दस्यास्तिस्रोऽस्तस्रानूकां तेषु पुरुषस्त-ङ्गायत्रीरग्निमूर्द्धेति प्रत्युचमिति ॥ गायत्र्यादिछन्दस्याभिर्ॠग्भिरुप-धेया इष्टकाश्छान्दस्याः । ता अनूकादिप्रदेशेषु तिस्रतिस्रनुपदध्यात् ॥

तत्र प्रथमः ॥ ॥ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयं अपाᳬंरेताᳬंसिजिन्वतीति । अयमग्निरादित्यरूपेण दिवो द्युलोकस्य ककुतिस्थलो मूर्द्धा शिरस्थानीयः पृथिव्यापतिः । दाहपाकारित्वेन बाल-कोप्ययम् । किञ्च अपाᳬंरेताᳬंसि । उदककार्याणि स्थावरजङ्गमशरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति ॥

अथ द्वितीयः ॥ अयमग्निः सहस्रिणो वाजस्पति नस्पति । मूर्द्धाकवीरयीणामिति । अयमग्निः सहस्रिणो वाजस्पति नस्पतिः । मूर्द्धाकवीरयीणामिति । अयं समिध्यमानोऽग्निः सहस्रिणः सहस्रसंख्यावतः शतिनः शतसंख्यावतः वाजस्यान्नस्य पतिः । अत एव मूर्द्धा शिरोवद्दुतमः । कविर्विद्वान् । तादृशो रयीणां धनानां दाता भवतु ॥

अथ तृतीयः ॥ ॥ त्वामग्ने पुष्करादध्यथर्वानिरमन्थत मूर्ध्नो वि-श्वस्य वाघत इति । हे अग्ने अथर्वाख्यऋषिः पुष्करादधिपद्मपत्रस्योपरि त्वां निरमन्थत । निःशेषेण मथितवान् । अतएव तैत्तिरीये पञ्चमकाण्डे ब्राह्म-णमाम्नातम् । पुष्करपर्णेद्धेननुपाश्रितमनिन्दादाति । कीदृशात् पुष्करात् मूर्ध्न उत्तमाङ्गवत् । प्रशस्तात् । विश्वस्य बाधतः सर्वस्य जगतो वाहकात् । इदं हि पुष्करपर्णमग्नियमन्थत् । यज्ञनिष्पादनद्वारा सर्वं जगन्निर्वहतिः ॥ कात्यायनः ॥ ॥ उत्तराश्चत्रिष्टुभोरेतः शिलायां भुवो यज्ञस्येति । त्रिष्टुप्

छन्दस्काभिर्ऋग्भिरुपधेया इष्टकास्त्रिष्टुभः तास्तिस्रो गायत्रीष्टकानां पूर्वभागे उपदध्यादितिशेषः ॥

तत्र प्रथमः ॥ ॥ भुवो यज्ञस्य रजसश्चनेतायत्रानियुद्भिः स च स शिवाभिः । दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्नेचकृषेहव्यवाहामिति । अयमग्निर्भूर्लोकस्य तत्रानुष्ठे यस्य यज्ञस्य तस्मिन्पक्षे प्रवर्तकस्य रजसो रजो गुणस्य सच नेता निर्वाहकः । तादृश हे अग्ने यत्र यस्यां दिवि सूर्यरूपो भूत्वा नियुद्भिः रमे नितरां योज्यमानाभिः शिवाभिरूतगाभिः सचसे समवेषि । तस्यां दिवि मूर्द्धानं शिरोवहुन्नीति दधिषे धारयसि । कीदृशं मूर्द्धानम् । स्वर्षां स्वः स्वर्गस्येति सर्वदातितिस्वर्षां स्तं हार्षाम् । सोभयाः शब्दवत्पुल्लिङ्गोऽयं हे अग्ने स्वगस्मिन्यज्ञे हव्यवाहं हविषः प्रापिकां ज्वालां जिह्वाञ्च कृषे करोषि ॥

अथद्वितीयः ॥ आबोध्यग्निः समिधा अयमग्निरबोधितः प्रज्वलितो ऽभूत । तत्र दृष्टान्तः । आयतीयुषासं । प्रतिधेनुमिव । उषः काले सामगते सतिदोहनार्थं ग्रामानां धेनुं यथेच्छार्पयति । उद्बुध्यमानस्याग्र्भानवो रश्मयः प्राजिहानाः प्रकर्षेणोद्गछंतो नाकं यच्छ स्वर्गमभिप्राप्तुं प्रसिस्रते अतिशयेन प्रसरइति । तत्र दृष्टान्तः । यह्वा इव वयांवीनां पक्षिणां मध्ये यह्वाः महान्तः पक्षिणो प्रकर्षेणोत्पतन्ति । तद्वत् । यह्वा महांतो जातपक्षाः पक्षिणः प्रवयांतत्रयस्थां वृक्षशाखां तुजिहाना ऊर्ध्वं गच्छेयुस्तद्वत् ॥

अथतृतीयः ॥ ॥ अवोचाम कवयेमेध्यायवचोवदाह वृषभाय वृष्णे । गविष्ठिरोनमसास्तोममग्नौ दिवीव रुक्ममुरुव्यं चमश्रेदिति । कवये क्रान्तदर्शिने वदये वचो वाक्य अवोचाम । कीदृशाय कवये मेध्याय प्रज्ञायुक्ताय वृष्णो कामानां वर्षयित्रे । गविष्ठिरः गविष्ठिरायभूमौस्थिरत्वेनावस्थितान कीदृशं वचः । अज्ञानसास्नो समशित्रिपमे नमस्कारेण मक्तं सोत्ररूपं अतएवं दारुचन्दनशीलं । तत्र दृष्टान्तः । दिवी द्युलोके रुवतं रोचमानं नुरुव्यंच विस्तीर्णगतिमासं सन्ध्यावन्दनादिषु ब्राह्मणै प्रयुक्तं वाच्यमश्रेत् । आक्रमति । तद्वद्दष्टांतः । दिवि द्युलोके रुक्त रोचमानं रुरुव्यंचविस्तीर्णगानिमार्त्यं सधावंनादिदाषु प्राह्मणै प्रयुक्तं वाच्यमश्रयति । तद्वदस्मदत्तोपि वह्निमाश्रयतु ॥ ॥ कात्यायनः ॥ ॥ जगती-

श्वादयमिहेतीति । जगतीच्छदस्ताभिर्झग्भिरुपधेया इष्टका जगत्यः ताः अन्तिमभागे अयमिहेत्यादिभिस्तिसृभिरऋग्भिरुपधेया इति ॥ ॥ तत्र प्रथमः अयमिह प्रथमोधायि धातृभिर्होतायजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविश इति । सेयमेकतृतीयेऽध्याये उगप्रयंतहापेतस्मिन्ननुवाके व्याख्याता अथद्वितीयः ॥ ॥जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे । घृतप्रतीको बृहतादिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिरिति । अयमग्निरचनिष्टोत्पन्नः किमर्थं सवितायनव्यसे स्तुष्टुप्राप्ताय स्तुतियुक्ताय कर्मणे एतत्कर्मसिध्यर्थमित्यर्थः । कीदृश्याग्नि जनस्य गोपः । प्राणिनो रक्षकः सुदक्षोऽत्यन्तकुशलः । जागृवि । कर्मणिसावधानः । घृतं प्रतीके मुखे यस्यासौ घृतप्रतीकः । तादृशोऽयमाग्निर्बृहतोप्रौढेणादिविस्पृशा द्युगपदीप्यमानः । शुचिः शुद्धः सन् भरतेभ्यो यज्ञभरणकुशलयजमानाभं विभाति विशेषेण भासते ॥ ॥ अथतृतीयः ॥ ॥ त्वामग्ने आंगिरसो गुहाहितमन्वविंदच्छिश्रियाणं वने वने । सत्तायसे मध्यमानः सहोमहत्वामाहुः सहसस्पुत्रमंगिर इति । हि अग्ने अंगिरसो महर्षयः त्वामन्वविदन् । अन्विष्या लभंत । कीदृशं त्वां अरणिप्रभृतिषु गोष्ठस्थानेषु अवस्थितं वने वने शिश्रियाणं तस्मिनस्मिन्नरण्ये दावाग्निरूपेणाश्रितः । स त्वं सहः प्रौढं बलमवलम्ब्यमथ्यमानो जायसे हेअंगिरः अग्नंसौष्टवयुक्ताग्ने त्वालहसस्पुत्रं बलस्य पुत्रमाहुः । महता बलेन मथने सति जायमानत्वात् ॥ ॥ कात्यायनः ॥ ॥ अपरास्ताभ्योऽनुष्टुपः सखायः सत्र इतीति । अनुष्टुछंदस्काभिर्ऋग्भिरुपधेया इष्टका अनुष्टुभः । ताजागतीष्टकानामग्रिमभागे सखायः सत्र इतितिसृभिर्ऋग्भिरुपदध्यात् । तत्रप्रथमः । सखायः सत्रः समाचमिषं स्तोमं चाग्नये । वर्षिष्टाय क्षितीनामूर्जोनप्त्रे सहस्वत इति । हि सखायः परस्परसख्ययुक्ताऋत्विग्यजमाना वो युष्माकं सख्यं चमिषंसमीचीनमिष्टार्थं सम्पादय तसामित्रस्योपसर्गस्यापेक्षितः शेषोध्याहृतः पूर्वंचाग्नये स्तोत्रं सम्पादयत । कीदृशायाग्नये क्षितीनांनिवासहेतूनां मध्ये वर्षिष्टाय बृहत्तमाय दृगुर्जोनप्त्रेबलस्यघातयित्रेविनाशमकुर्वते सहस्वते स्वयमतिशयेन बलवते ॥ अथद्वितीयः ॥ संसमिद्युवसेवृषन्नग्नेविश्वान्यर्यआ । इळस्पदेसमिध्यसेसनोवसून्याभरेति । हेवृषन् कामानां

वर्षकामानां वर्षकाग्रे विश्वानि सर्वाणि फलानि संममित् सम्पादय सम्पादैवयुवसे यजमानेन निश्रयसि । अर्थ ईश्वरस्त्वमागत्य इलस्यपदपृथिवीरूपार्यवेद्यास्थाने समिध्यसे सम्यकत्त्वाल्पसेसताद्दशोमहानुभावस्त्वन्तीस्यभ्यं वसुनि धनानि समाभर । सम्यगातृप्पप्रसच्छ ॥ अथतृतीयः ॥ त्वामग्नेहविष्मन्तोदेवम्मर्तासईलते । मन्येत्वाज्ञातवेदस*ं*सहव्यावक्ष्यानुषगिति । हे अग्ने मर्ताऽसौमरणशीला मनुष्णह विष्मन्तः पाणौ गृहीतहविषो यज्ञभागादेवं देवनादिगुणे युक्ते त्वां ईलते स्तुवन्ति । अहमपि त्वां जातवेदसं सर्वज्ञं जानामि मन्ये । सत्वं आनुषक् । अनुषक्तः सन् हव्याहवींषि वक्षि वहसि ॥ तत्र वैकल्पिका चतुर्थी ॥ त्वां चित्रश्रवस्तमहवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढ्व इति । चित्रं श्रवोविचित्राकीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन चित्रश्रवस्तमः पुरुणां वहतां यजमानानां प्रियः पुरुप्रियः तथाविध हेअग्ने पिक्षु प्रजासु मध्ये जतन्वः ऋत्विग्रपातताः त्वां हवन्ते आदूकयन्ति किमर्थं हव्याय वोढ्वेहविर्वोढुं । कीदृशं त्वां शोचिष्के शंशोचीं षित्वालाएव केशस्थानीयो यस्यासौशोचिष्केशः ॥ कात्यायनः ॥ आषाढावेलायाः परस्नाद्बृहतीरे ना वइतीति । बृहतीच्छन्दस्ताभि ऋग्भिभि रूपधेया इष्टकाः बृहत्यः ता अखिलेष्टकामाः पूर्वभागेरानात्र इति तिसृभिर्ऋग्भिरूपदध्यात् । तत्र प्रथमः ॥ एनावो अग्निंनमसोर्जोनपातमाहुवेप्रियञ्चे । तिष्ठमरति*ं*स्वध्वन् विश्वस्य दूतममृनंमिति । हेऋत्विग्यत्तमाना वो युष्माकं तत्सम्बधिनममि एता नमसा । एतेन नमस्कारेण युक्तोऽहमाहुवे आह्वयामि । कीदृशमग्निं । ऊर्जाऽन्नस्य नपातम विनाशयितारं प्रिय यजमानं । प्रीतिहेतिञ्चेतिष्ठं अतिशयेन चेतयितव्य अरतिरूपरमस्तद्राहितं सवन्दोयुक्तमित्यर्थः । स्वध्वरं शोभनस्य क्रतो निर्ष्णदकं विश्वस्य दूतं सर्वस्य जगतो दूतवत्कार्यकारिणं । सर्वस्य हि गृहे दाहपाकादिकार्यं करोति अमृत मरणरहितं । मनुष्यवद्देवानां सहसा मरणं नास्ति ॥ अथद्वितीयः ॥ विश्वस्य दुतममृतं विश्वस्य दुतममृतं । स योतते ऽअरूषा विश्वभोजसासदुद्रवत्स्वाहुत इति । विश्वस्य दूतं सर्वस्य जगतो दूतं सर्वस्य जगतो दूतवत्कार्यकारिणं । अमृतंअमरणशीलमग्निं आह्वयामिपुनर्वचनमादरार्थयमग्निमाहुवसोग्निविश्वभोजसा विश्वस्य भोक्तारौ अरुषा अरोच्यमाना

वश्वौ योजते रथे युनक्ति । ततः सरावाग्निः स्वाहुतः । सुष्ठु आहुतः सन्न-दुद्रवत् । गच्छाते ॥ अथतृतीयः ॥ **सदुद्रवत्स्वाहुतः सदुद्रवतस्वाहु-तः । सुब्रह्मायज्ञः सुशमो वसूनादेवꣳराणेजनानामिति** । स्वाहु-तः ऋग्भिः सुष्टु कर्मण्याहुतः सोऽयमग्निर्वसुनां जनानानां निवासार्थिनां प्रा-णिनां सम्बन्धिदेवं दोह्यमानं रायोहविर्लक्षणं धनं प्रतिदुद्रवत् । आगच्छ-तु । ईदृशोऽग्निः क्षुत्वसा शोभन ऋत्विग्रूपो ब्रह्मा यस्यासौ शोभनमन्त्रो वा यज्ञो यजनी यः पूजनीयः । सुशोभी शोभनकर्मत्वात् ॥ ॥ कात्यायनः ॥ अपरेणगायत्रीभ्यनुष्णि हाम्ने वाजस्येतीति । नुष्णिकूच्छन्दस्काभिऋग्भि-रूपधेया इष्टकानुष्णि । हस्तांगायत्रीष्टकाभ्यः पश्चिमभाविनीःरूपदध्यात् ॥ तत्र प्रथमः ॥ ॥ **अग्नेवाजस्यगोमतईशानः ॥ सहसोयहो । अस्मे धेहि ज्ञातवेदोमहिश्रव इति** । सहसो वलस्य यहो हेमूनो जा-तवेदउत्पन्नजगदभिज्ञाग्ने गोमतो । गोभियुक्तस्य वाजस्यान्नस्य ईशानस्त्वं अस्मे अस्मासु महिश्रवी महतीकीर्तिर्महदन्नं वा धेहि सम्पादय ॥ ॥ अथ द्वितीयः ॥ ॥ **सदधानोवसुष्कविरग्निरीलेन्योगिरा । खेदस्मभ्यं-पुर्वणीकदीदिहीति** । पुरु वलं अनीक सुखं सैन्यं वा यस्यासौ पुर्व-णीकः । तादृश हेअग्ने सत्वमस्मभ्यं रेयत । रयिवतुनवत् । धनयुक्तं गृहक्षेत्रा-दिकं दीदिहि । दीप्यस्व । कीदृशस्त्वं इधानो दीप्यमानः वसुर्निवासहेतुः कविः क्रान्तदर्शी अग्निरग्रणीः प्रथमं यज्ञप्रवर्तक इत्यर्थः । गिरा मन्त्ररूपया वाचा ईलेन्यः स्तुत्यः ॥ ॥ अथ तृतीयः ॥ ॥ **क्षपो राजन्नुतत्मनाग्ने वस्तोहुतोषसः । सतिग्मजम्भरक्षसो दहप्रतीति** । हेअग्ने वस्तोर-हानि क्षपः क्षपय । उतापिच । उषसः उपः कालानपि क्षपय । द्वितीया या अत्यन्तं सङ्गोगावात्वित्वात् । सर्वेष्वप्युषः कालेषु राक्षसान् विनाश-येत्यर्थः । हेराजन् दीप्यमानाग्नेन केवलं स्वकीयसेनामुखेन रक्षसां क्षपणं उतत्यना आत्मनापि स्वयमपि क्षपयेति मुखे विदारणवाचिना जम्भशब्देन ज्वालानुपलक्ष्यन्ते तिग्माही । क्ष्णं जम्भा यस्यासौतिग्मजम्भः । हेतिग्मजम्भ-सत्वं रक्षसो राक्षसान्प्रतिप्रत्येकं दह भस्मीकुरु ॥ ॥ कात्यायनः ॥ भद्रो न इति ककुभच्छन्दस्काभिर्ऋग्भिरूपधेया इष्टका ककुभस्ताभद्रो न इति ति-सृभिर्ऋग्भिरूपदध्यात् ॥ तत्र प्रथमः ॥ **भद्रो नो अग्निराहुतो भद्रा-ऽअध्वरः । भद्रा उत प्रस्तय इति** । आहुत ऋत्विभिराहुतोऽग्निर्नो

अस्माकं भद्रो भदं नीयः कल्याणो भवत्त्विति शेषः । किञ्च हेभद्रे हेकल्या-णाग्नेरातिस्त्वदीयदानमस्याकमस्तु । हेसुभगसुष्ठुभजनीयाग्नेस्त्वत्मसादाद-ध्वरोऽस्मदीयो यज्ञो भद्रः कल्याणोभवतु । उतापिच प्रशस्तयः प्रशंसनानि भद्राः सन्तु ॥ ॥ अथद्वितीयः ॥ ॥ **भद्रानुतप्रशस्तयोभद्रं मनः कृणु-ष्ववृत्रतूर्ये । येनासमत्सु सा सह इति ।** उतापिच प्रशस्तयो भद्राः सन्तु । समत्सुसं ग्रामेषु येनपनासहशत्रजातमभिभपसि जन्मनः वृत्रतूर्ये । तुयातिर्हिंसार्थः । वृत्रवधाय पाप्मा वै वृत्र इतिश्रुतेः । तद्वधार्थमिति वाभद्रंक-ल्याणं कृणुष्व कुरुष्व ॥ ॥ अथ तृतीयः ॥ ॥ **येनासमत्सुसासहोव-च्छिएतनुहि भूरिशर्द्ध तां । वने माते अभिष्टिरिति ।** हेअग्ने त्व मेन मनसा समत्सु संग्रामेषु सा सहः शत्रु जानमभिभव सितेन मनसा भूरि शर्धतां प्रभूतं त्वलं कुर्वतां शत्रुणां सम्बन्धीनिस्थिराणि दृढानि धन्नुषीति शेषः । अमतनुहि अवतारय । वयं ते त्वां अभिष्टिभिः । अभ्येषण साधनै-र्योगैर्वने मसम्भजेमहि ॥ ॥ कात्यायनः ॥ अनूकान्ते दक्षिणे पंक्तोरग्नि त-मितीति । पङ्क्तिश्च्छन्दस्काभिर्ऋग्भिरूपधेया इष्टकाः पंक्तयः ताऽअनूकान्ते दक्षिणप्रदेशे अग्निन्तमित्यादिस्तिसृभिर्ऋग्भिरूपदध्यादितिशेषः ॥ ॥

तत्र प्रथमः ॥ **अग्निं तं मन्ये योवसुरस्तयमान्तिधेनवः । अस्तमर्वन्त आशवोस्तन्नित्यासोवाजिनइषᳬस्तोतृभ्य आभरे-ति ।** वसुर्निवासहेतुर्योऽग्निरस्ति । अहं तं तादृशमग्निं मन्ये जानामि । धेनवः

सायंकाले प्रदीप्यमानमग्निं दृष्ट्वा अयमस्मद्दोहनकाल इति ज्ञात्वा अस्तं स्वकीययजमानगृहं प्रति किञ्च । आशवः शीघ्रगामिनो अर्वन्तोऽश्वा अयमग्निं दृष्ट्वा अस्तं गृहं यन्ति गच्छन्ति । पुनस्तदेवाह । नित्यासो नित्याः शाश्वता वाजिनो बलवन्तो अश्वा यमग्निं दृष्ट्वा अस्तं गृहंगच्छन्ति । हे तादृशाग्ने ! त्वं स्तोतृभ्योऽस्मभ्यं इषमन्नं आभर सम्पादयेसर्थः ॥

अथ द्वितीयः ॥ सोऽअग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः समर्वन्तो रघुद्रुवः । सꣳसुजातासः सूरय इषꣳ स्तोतृभ्य आभरेति ।

यो निवासहेतुरग्निरस्तिस तादृशोग्निर्गृणे अस्माभिस्तूयते धेनवः पशवो यमग्निं दृष्ट्वा समायन्ति सम्यगाभिमुख्येन गच्छन्ति । किञ्च रघुद्रुवः लघुद्रुवः शीघ्रगामिनोर्वतोऽश्वाः प्रतिसमायन्ति । सुजातासः शोभनजन्मानः सूरयो विद्वांसः ऋत्विजादयः यमग्निं प्रतिसमायन्ति हे अग्ने तादृशस्त्वं स्तोतृभ्य इषमन्नं सम्पादय ॥

अथतृतीयः ॥ ॥ उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आभरेति ।

हेसुश्चन्द्र सुष्टु आह्लादनकाराग्ने । आसनि त्वदीय आस्ये सर्पिष आज्यस्य सम्बन्धिन्यौ उभे दर्वीसदृशाहनूर्यद्वासर्पिषः पानार्थं दर्वीसदृशौ हस्तौ । अथवा सर्पिषः सर्पिः सम्बन्धिन्यौ जूहू प्रभृतौ । श्रीणीषे सेवसे । हनुप्रेरणपर्यन्तं सर्पिस्त्वया पीतमित्यर्थः । उतो अपि च हेशवसस्पते बलस्याधिपते उक्थेषु यज्ञेषु नोऽस्मानुपूयाउत्कर्षेण पूरय प्रापयेसर्थः । स्तोतृभ्यो यजमानेभ्यः इषमन्नं आभर सम्पादय ॥ ॥ कात्यायनः उत्तरे पदपंक्तीरग्नेतमद्येतीति । पदपंक्तिश्छंदस्काग्निरुपधेया इष्टका पदपंक्त्यस्ता अनूकस्योत्तरभागेनुपदध्यात् ॥

तत्र प्रथमः ॥ ॥ अग्ने तमद्याश्वन्नस्तोमैः क्रतुन्नभद्रꣳहृदिस्पृशो ऋध्या मातओहैरिति ।

हेअग्ने हृदिस्पृश हृद्यमत्यन्तप्रियं ते त्वामद्यास्मिन् कर्मणि ओहैःफलप्रापकस्तोमैः ऋध्यामसमृद्ध करवाम । तत्रैको दृष्टान्त । अश्वं न यथा लोके

अश्वं घासादिप्रदानेन समर्द्धयन्ति तद्वत् । अथापरो दृष्टान्तः । ग्रमुं न यथा समीधीत ज्योतिष्टोमादिक्रतुं संगीतानुष्ठानेन समर्द्धयन्ति तद्वत् । भद्रं कल्याणमित्यग्निविशेषणं वाऽस्तु ॥

अथ द्वितीयः ॥ ॥ अधाह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः थि रतस्य वृहतो बभूवेति ।

हेअग्ने अथाऽस्मदीयस्तोत्रानन्तरं क्रतोरनुष्ठीयमानस्य कर्मणो-रथीर्विभूत्र हि । रथोस्यास्तीति रथी सारथिर्यथा निर्वाहकस्तथा त्वं निर्वाहको बभूत्र खलु कीदृशस्य क्रतोर्भद्रस्य कल्याणरूपस्य दक्षस्य स्वफलप्रदानसमर्थस्य साधोरस्माभिः साध्यस्य क्रतस्य व्यत्यस्य मोघफलस्य बृहतः प्रौढस्य ।

अथ तृतीयः ॥ एभिर्नो अर्कैर्भवानोऽअर्वाङ् स्वर्णपीतिः । अग्ने विश्वेभिः सुमनाऽअनीकैरिति ।

हेअग्ने विश्वेभिः अनीकैः सर्वैस्त्वदीयसैन्यैः सहितः सुमनाः सौमनस्यं प्राप्तः सन् एभिरिदानीं क्रियमाणैर्नोऽस्मान्–सन्बन्धिभिरर्कैरर्चनीयैः स्तोत्रैर्नोस्मान्प्रत्यर्वाक् भव समीपस्थो भव अवरं समीपदेशमञ्चति गच्छत्यर्वाक् । तत्र दृष्टांतः । स्वर्णज्योतिः स्वर्गलोके प्रकाशरूप आदित्यो यथासमीपवर्ती भवति तद्वत् ॥ ॥ कात्यायनः ॥ पुरीषवत्याः पूर्वामतिच्छदसं प्राच्यौ पुरीषसहिते भद्रारातिर्नृत्र तूर्येऽत्रस्थिराग्निंꣳहोतारमितीति । अतिच्छंदस्काभिर्ऋग्भिरुपर्धया इष्टकास्तिस्रोतिच्छदसस्तासां मध्ये एकमतिच्छदसमिष्टकां पुरीषवतीष्टकायाः पूर्वभागे उपदध्यात् ॥

तत्रैकस्याः पाठः ॥ ॥ अग्निंꣳहोतारं मन्ये दास्वन्तं वसुंꣳसुनुंꣳसहसो जातवेदसं विप्रन्नजातवेदसं । यऊर्ध्वया-स्वध्व सदेवोदेवाच्याकृपा । घृतस्य विभ्राष्टिमनुवष्टिशोचिषा जुह्वानस्य सर्पिष इति ।

इममग्निं होतारं देवानामाह्वातारमहं मन्ये कीदृशमग्निं वसुं धनं दास्वंतं प्रयच्छंतं सहसः सूनुं बलस्य पुत्रं जातवेदसं इत्यन्ना जगदभिज्ञं। तत्र दृष्टान्तः विप्रं नजातवेदसं । यथा ब्राह्मणं कुटुम्बिनं उत्पन्नपुत्रानभिज्ञं मन्ये तद्वत् । योऽग्निर्देवकुर्ध्वयाअत्यन्नतया उत्पुन्नतन्नतया देवाच्या देवान्प्रति गच्छता

कृपात्क्लृप्तया ज्वालया स्वध्वरः सुष्टु यागनिष्पादको भवति योऽग्निर्घृतस्य विभ्राषि विशेषदीप्तिं शोचिषा स्वकीयेन तेजसा अनुवष्टि। अनुवष्टि अनुकामयते कीदृशस्य घृतस्य आजुह्वानस्य सर्वतो हूयमानस्य सर्पिषः सर्पणशीलस्य ॥ ॥ कात्यायनः ॥ अग्नेत्वामित्यनूकांतेपर इति । अनूकस्य पश्चिमभागे द्विपदछन्दस्यास्तिस्त्र इष्टका उपदध्यात् ॥

तत्र प्रथमः ॥ अग्नेत्वन्नोअन्तम् वोभवात्रुरुथ्यइति ।

हेअग्ने त्वं नो अस्माकं अन्तमो अन्तिकतमो भव उतापि च त्राता रक्षकः शिवो मंगलरूपी त्वं वरुथ्यो वरुथे गृहे नित्यं सन्निहितो भव ॥

अथ द्वितीयः ॥ ॥ वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमꣳ रयिंदा इति ।

वसुर्वसुमानयमग्निर्वसुभिरिन्द्रादिदैवतैरादरेण श्रूयत इति वसुश्रवाः हेतादृशाग्ने । अच्छास्मदभिमुखोनक्षि। प्राप्नुहि कीदृशस्त्वं द्युमत्तमं अतिशयेन दीप्तियुक्तं रयिं धनं दाः प्रयच्छन् ॥

अथतृतीयः । तं त्वा शोचिष्टदीदिवः सुम्नाय नूनमीमहे सखिभ्य इति ।

हेशोचिष्टदीदिवः शुद्धतमदीप्यमान सखिभ्यः सखीनामस्माकंमूनाय सुखाय तं पूर्वोक्तगुणयुक्तं त्वा ईमहे प्राप्नुमः ॥ ॥ इति षोडशाध्याये पञ्चमोऽनुवाकः ॥

पञ्चमेऽनुवाके च्छन्दस्या इष्टका उक्ताः ॥ ॥ अथ षष्ठे गार्हपत्यस्य पुनश्चितिमन्त्रा उच्यन्ते ॥ ॥ कात्यायनः ॥ । मध्ये स्क्तं गार्हपत्यं पुनश्चितिश्चोपरितन्द्वयेन ऋषय इति प्रत्यृचामिति पूर्वमुपहिताया गार्हपत्यस्य चितेर्मध्ये पुनरष्टका येन ऋषयइष्टयेष्टाभिर्मन्त्रैरुपदध्यात् ।

तत्र प्रथममन्त्रपाठस्तु ॥ येन ऋषयस्तपसा सत्रमायं निधाचाअग्निꣳस्वराभरंतः । तस्मिन् ह निदध नाके अग्निं यमाहमनवस्तीर्णबर्हिषमिति ॥

येन स्वर्गेण निमितभूते पूर्वमहर्षयस्तपसा संतापयुक्तेनाग्निना सत्रमायन्ननुष्ठितवंतः । कीदृशा महर्षयः अग्निमिन्धानाः प्रज्वालयंतः स्वराभरंतः स्व-

गमाहर्तुं समुद्यताः अहमपि तस्मिन्नाके निमित्तभूते सति अग्निं दधे स्थापयामि । यमग्निं मनवः पूर्वमनुष्यास्तीर्णबर्हिषः प्रसारितयज्ञमाहुः । तमग्निं निदध इत्यन्वयः ॥ ॥

अथ द्वितीयः ॥ ॥ तपत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुतवा हिरण्यैः । नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिव इति ।

हेदेवा ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वै मनुष्यैः उत वा हिरण्यैः । नाकं गृभ्णानाः सकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिव इति । हेदेवा ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वैर्मनुष्यैः उतवा हिरण्यादिभिः सर्वसाधनद्रव्यैःस्वसहितस्तमग्निं अनुगच्छेम अनुगताः सन्तः फलं प्राप्स्याम इत्याशयः । स एव स्पष्टीक्रियतेद्रिः पृष्ठे स्वर्गस्योपरि नाकं दुःखरहितं स्थानं गृभ्णाना गृहीतुकामा वयमित्यर्थः । कीदृशा दिवः पृष्ठसुकृतस्य लोके सम्यगनुष्ठितस्य कर्मणः फलभूते तृतीये पृथिवीमारभ्य गणनायां त्रिसंख्यापूरकअधिरोचने अधिकत्त्वेन दीप्यमानः ॥ ॥ अथ तृतीयः ॥ ॥ आवाचो मध्यमरुहुरण्युरथमग्निः सत्पतिश्चेकितानः । पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदंकृणुतां येपृतन्यव इति ।

अयमग्निर्वाचोमध्यमरुहत स्तोत्ररूपाया वाचः प्रतिपाद्यमर्थमारूढस्तोत्रगतसर्वगुणयुक्त इत्यर्थः । कीदृशोऽग्निः भुरण्युर्जगद्भरणशीलः । सत्पालकः । चेकितानोऽभिज्ञानवान् । स च पृथिव्याः पृष्ठभूमेरुपरि विहितः । स्थापितो दविद्युतत । अतिशयेन द्योतते ये तु शत्रवः पृतन्यवो अस्माभिः सह कलहं कर्तुमिच्छन्ति तानधस्पदं कुणुतामस्माकं पादयोरधस्तादवस्थितान् कुरुताम् ॥

अथ चतुर्थः ॥ ॥ अयमग्निर्वीरतमोवयोधाः सहस्रियो द्योततामप्रयच्छन् । विभ्राजमानः शरीरस्य मध्यउपप्रयाहि दिव्यानि धामेति ।

अयमग्निः द्योततां अस्मिन्कर्मणि प्रकाशतां कीदृशः वीरतमः अतिशयेन शूरः वयोधाः वयस आयुषः स्थापयिता सहस्रियद्दष्टकासहस्रेण संमितः अप्रयुच्छत् । अस्मिन् कर्माणि प्रमादरहितः । सर्पशरीरस्य जलस्य मध्ये

विभ्राजमानः पूर्ववत् । वैकृतादिरूपेण विशेषः । प्रकाशमानः । हे अग्ने एवंभूतस्त्वं दिव्यानि धामस्थानानि उपप्रयाहि प्राप्नुहि ॥

अथ पञ्चमः ॥ ॥ सम्प्रच्यवध्वमुपसम्प्रयाताग्ने यथो देवमानान्कृणुध्वम् । पुनः कृण्वानापितरायुवानान्वाताꣳसो त्वयि तन्तुमेनमिति ।

हेअग्नेत्वं सम्प्रच्यवध्वं स्वकीयात्स्थानात्सम्प्रच्यवध्वंसम्यङ्निर्गछ । ततः अस्मदीयदेवयजन मागत्योपेत्य सम्प्रयात सम्यक्प्राप्नुहि । ततो देवमानान् । देवलोकप्राप्तिहेतून् यथोमार्गान् कृणुध्वं कुरु सर्वत्र पूजार्थं बहुवचनम् । किंकुर्वन् पितामातरौ युवाना युवानौ तरुणौ पुनः भूयो भूयः कृण्वाना कुर्वन् एवंभूतः सोऽग्निः यजनत्वानिमित्तभूते सति एतं तुं यज्ञप्रवाहं अन्वातांसात् । अनुक्रमेण तनोतु सम्पादयतु ॥ ॥

अथ षष्ठः ॥ ॥ उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते सꣳसृजेथामयञ्च । अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदतेति ।

हे अग्ने त्वं उद्बुध्यस्व अस्मद्विषये सावधानो भव । एनं यजमानं प्रतिजागृहि । प्रतिदिनं जागरुकं सावधानं कुरु । अयं च त्वञ्च । मिलित्वा इष्टापूर्त्ते श्रौतस्मार्त्ते कर्मणी सꣳसृतेथां सम्पादयतम् । किञ्च विश्वेदेवा यजमानश्च सर्वे यूयं सधस्थे सहस्थितियोग्येऽस्मिन्कर्मणि सीदत उत्तरस्मिंलोके अधिकत्त्वेन सीदताम ॥

अथ सप्तमी ॥ येन वहसि सहस्रं येनाग्ने सर्ववेदसम् । तेन संयज्ञन्नो नय स्वर्देवेषु गन्तवइति ।

हे अग्ने येन व्यापारेण सहस्रं वहसि सहस्रदक्षिणकं यज्ञं सर्वलोकं देवेषु देवान् प्रतिगन्तवे गन्तुं नय प्रापय ॥

॥ अथाष्टमः ॥ ॥ अयं तयोर्निर्ऋत्वियो यतोजातोऽभरोचथाः । तं जानन्नग्नआरोहाथानो वर्धया रयिमिति ।

अयं मन्त्रो तृतीयाध्यायस्य षष्ठेऽनुवाके व्याख्यातः ॥ ॥ इति षोडशेऽध्याये षष्ठोऽनुवाकः ॥

षष्ठेऽनुवाके गार्हपत्येष्टकोपधानमन्त्रा उक्ताः ॥ ॥ अथ सप्तमे पुनराहवनीयस्य पञ्चमाचितिशेषभूतेष्टकोपधानमन्त्रा उच्यन्ते ॥ ॥ कात्यायनः ॥ ऋत्व्ये तपश्च तपस्यश्चेतीति द्विऋत्व्येष्टके उपदध्यादितिशेषः ।

पाठस्तु ॥ तपश्च तपस्यश्च शैशिराऽऋतूऽअग्नेरन्तः श्लेषापि । कल्पेता द्यावापृथिवीकल्पं तापाय औषधयः कल्पन्तामग्नयः पृथङ्नमज्यैष्ठयायसव्रताः । ये अग्नयः समनसोन्तरा द्यावापृथिवी इमे । शैशिरा ऋतूअधिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति ॥

व्याख्यातः समानार्थः ॥ ॥ कात्यायनः ॥ ॥ विश्वज्योतिषं परमेष्ठीत्वेति ।

पाठस्तु ॥ परमेष्ठीत्वासादयतु दिवस्पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छा सूर्यस्तेधिपतिस्तयादेवतायां गिरस्व ध्रुवासीदेति ।

अयमपि व्याख्यातः ॥ ॥ कात्यायनः ॥ ॥ लोकं पृणाः पूर्ववदिति ।

पाठस्तु ॥ लोकं पृणायोसीदध्रुवात्वम् । इन्द्राग्नीत्वा वृहस्पतिरस्मिन्योना असीषन् । ताऽअस्यसूददोहसः सोमꣳश्रीणन्ति पृश्नयः । तन्वन्देवानां विशस्त्रिण्वारोचनेदिवः । इन्द्रविश्वाऽअवीवृधन्समुद्रव्यचसङ्गिरः । रथा तमꣳ रथीनां वाजानाꣳसत्पतिं पतिमिति ।

त्रयो लोकं पृणेष्टकोपधानमन्त्रा व्याख्याताः ॥ ॥ कात्यायनः ॥ प्रोथदश्वइत्युतरां विकर्णीमिति । उपदध्यादितिशेषः ।

पाठस्तु ॥ प्रोथदश्वानयवसेविष्यन्यदामहः संवरणाद्व्यस्थात् । आदस्यवातोअनुवातिशोचिरधस्मतेव्रजनंकृष्णमस्तीति ।

*अयमग्निरश्वोन अश्व इव प्रोथत् । प्रोथदश्वः* । आग्नेयी त्रिष्टुप् । मथ्यमानोऽग्निरुच्यते । प्रोथति शब्दार्थः शब्दायतेऽग्निः अश्वोऽनयवसेविष्यन् । अश्व इव यवसे घासे विषयभूते अविष्यन् ग्रसिष्यन् । यदा यस्मिन्काले महतः संवरणात् । संव्रियते अस्मिन्नग्निरिति संवरणमरणिकाष्ठमुच्यते । अरणिकाष्ठात् व्यस्थात् व्युत्तिष्ठते प्रकाशीभवति । आत् अथान्तरमेव अस्याग्नेः वातः अनुवाति । शोचिः संदीपनः । अथ समानार्थौ छन्दसि । स्मनिपातोऽनर्थकः तथैतस्येत्यर्थः । नह्यत्र युष्मदः प्रयोगः । परोक्षकृतत्वान्मन्त्रस्य । श्रुतिरप्यमुमर्थं दर्शयति । अथैतस्य व्रजनं कृष्णं भवतीति । व्रजति गच्छत्यनेनेति व्रजनं कृष्णं भवति । कात्यायनः । आयोष्ट्वेति स्वयमात् ।

पाठस्तु॥आयोष्ट्वासदने सादयाम्यवतश्छायाᳬं समुद्रस्य हृदये। रश्मीवतीं भास्वतीं माद्यामास्यापृथिवीं मोऽवन्तरिक्षम्॥ परमेष्ठी त्वासादयतु दिवस्पृष्ठे व्यचस्वतीम् । दिवं मच्छदिवं याहिᳬंसीः। विश्वस्मै प्राणायोपानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । सूर्यस्त्वाभिपातुमह्यास्वस्त्याछर्दिषा शन्तमेनतया देवतयां गिरस्वध्रुवे सीदतामिति ।

राति निरन्तरं गच्छतीत्यायुरादित्यः यच सर्वजगद्वाति तस्यावतः समुद्रस्य समुद्रसमानस्यादित्यस्य हृदये प्रधानभूते छायायां आश्रयभूते सदनेस्मिन् स्थाने सादयामि । कीदृशी त्वा रश्मीवतीरश्मिसंयुक्तां भास्यतीदीप्तिमती हिइष्टके या त्वं द्यां द्युलो-

---

*अस्यैकमन्त्रस्य भाष्यं आदर्श हस्तलिखित पुस्तके अनुपलब्धत्वात् उवट भाष्याद्गृहीतम् ।

कं आभासयसि प्रकाशयसि । तथा उर्वीं भूलोकं उरुविस्तीर्णमन्तरिक्षं चाभासि । तादृशीं त्वां सादयामीतिसम्बन्धः । शिष्टं व्याख्यातं ॥ ॥ कात्यायनः अग्निं प्रोक्षति हिरण्यशकलसहस्रेण शतेद्वे प्रकिरति सहस्रस्येति प्रतिमंत्रमिति । हिरण्यसम्बन्धीनां शकलानां सहस्रेणाग्नेः प्रोक्षणं कुर्यात् । तत्र शकलसहस्रमध्ये द्वेद्वे शते सहस्रस्येत्येकैकेन मन्त्रेण प्रकिरेत् ॥ ॥ तेषांपाठः ॥ ॥ सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि । साहस्रोसि सहस्रायत्वेति । हेचिते इष्टकानां सहस्रस्य पूर्वभागावस्थितस्य प्रमातुल्यासि । तथा दक्षिणतस्थितस्येष्टकासहस्रस्य प्रतिमा तुल्या । एवं पश्चिमदिग्भागावस्थितस्येष्टकासहस्रस्य उन्मा तुल्यासि हेचित्यग्ने त्वमुत्तरस्यां दिशि साहस्रः सहस्रसम्बन्ध्यसि । तथा ऊर्ध्वायां दिशि सहस्रसंख्याकफलसन्ध्यर्थं प्रोक्षामि ॥ ॥ इतिषोडशेऽध्याये सप्तमोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो दद्याद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणविरचिते माधवीयवेदार्थप्रकाशे काण्वसंहिताभाष्ये षोडशोऽध्यायः ॥ १ ॥

# अथ शुक्लयजुर्वेदकाण्वमन्त्रभाष्ये सप्तदशोऽध्यायः ॥ १७ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

षोडशेऽध्याये चयनमन्त्रान् समाप्य सप्तदशेऽध्याये शतरुद्रियाख्याहोममन्त्रा उच्यन्ते ॥ ॥ तत्र कात्यायनः ॥ ॥ शतरुद्रियहोमउत्तरपक्षस्यापरस्यां स्रक्त्याम्परिश्रितस्वर्कपर्णेनार्ककाष्ठेन शातर्यन् सन्ततं जर्तिलं मिश्रानविधुकासक्तूनजाक्षीरमेके तिष्ठस्तुदङ्मुखस्त इत्यध्यायेन अनुवाकान्ते स्वाहाकारो जानुमात्रे पश्चान्ते च नाभिमात्रे । प्राक्प्रत्यवरोहेभ्यो मुखमात्रे । प्रतिलोमं प्रत्यवरोहं जुहोति प्रमाणेषु नमोस्त्विति प्रतिमन्त्रं । अस्यार्थः ॥ हिरण्यशकलैरग्निप्रोक्षणानन्तरं शतरुद्रियसंज्ञो होमः । तस्य हवनीये प्राप्तात्वपवादमाह । उत्तरपक्षपश्चिमकोणेयाः परिश्रितो जङ्घामात्र्यादयः पूर्वं निखातास्तासु होमः । तत्र विधिः जर्तिलैरारण्यतिलैर्मिश्रानविधुकासक्तून्कशूकसक्तूनर्कपत्रेण जुहोति । किङ्कुर्वन् । अर्ककाष्ठेन सततं क्षारयन् परिश्रितसुपातयन् । अर्कपत्रं दक्षकरेणादायार्ककाष्ठं वामेनादाय तेन पीतनीयम् । सक्तुस्थानेऽजादुग्धमितिकेचित् । उदङ्मुखो नमस्त इत्यध्यायेन । तत्रानुवाकत्रयान्तेऽर्भकेभ्यश्चवो नम इत्यत्र जानुमात्रपरिश्रितिस्वाहाकारो विधेयः । पश्चानुवाकान्ते सुधन्वने चेत्यत्र नाभिमात्रे परिश्रितिस्वाहाकारः । नमोस्तु रुद्रेभ्य इतिप्रत्यवरोहमंत्राः तेभ्यः प्राङ्मुखमात्रपरिश्रिति स्वाहाकारः । नमोस्त्विति त्रिऋग्भिः प्रतिलोमं होमः । ये दिवीति मुखमात्रे । येऽन्तरिक्ष इति नाभिमात्रे । ये पृथिव्यामितिजानुमात्र इतिसूत्रार्थः ॥ ॥ पाठस्तु ।

ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवे नमः । बाहुभ्यामुतते नम इति । रुत् दुखं द्रावयाति इति रुद्रः । यद्वा । रुगतौ गत्यर्थास्ते ज्ञानार्थाः । रवणं रुत् ज्ञानम् । भावे क्विप् । तुगागमः । रुत् ज्ञानं राति ददाति रुद्रः । ज्ञानप्रदः । यद्वा पापिनो नरान् दुःखभोगेन रोदयतीति रुद्र । हेरुद्र । ते तव मन्यवे क्रोधाय नमो नमस्कारोऽस्तु ।

उतोऽपि च ते तवेषवे बाणाय नमः । उताधि च ते तव बाहुभ्यां नमः । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

**या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशीहीति ।** हे रुद्र ! या ते तवेदृशी तनूः शरीरं हे गिरिशंत । तया तन्वा नोऽस्मानभिचाकशीहि । अभिपश्य । चाकशीहि पश्यति कर्म कीदृशी तनूः । शिवा शान्ता मङ्गलरूपा । यतोऽघोरा । अविषमा सौम्या । अतएवापापकाशिनी । पापमसुखं काशयति प्रकाशयति पापकाशिनी न पापकाशिनी अपापकाशिनी । या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलासे स्थितः शं सुखं प्राणिनां तनोति विस्तारयति गिरिशन्तः । गिरीव विस्थितः शं तनोतीति वा । गिरौ मेघे स्थितो वृष्टिद्वारेण शं तनोतीति वा । गिरौ शेते गिरिशः । अमति गच्छति जानातीत्यन्तः सर्वज्ञः अमगतौ भजने शब्दे । कर्त्तरि क्तः । गिरिशश्चासावन्तश्च गिरिशन्तः तत्सम्बुद्धिः । शकंध्वादित्वात् पररूपम् । कीदृश्या तन्वा । शन्तमया सुखतमया सुखयितृतमया ॥ २ ॥

**यामिषुं गिरिशन्तहस्ते विभर्ष्यस्तवे । शिवां गिरित्रतां कुरु मा हि ꣳसीः पुरुषं जगदिति ।** हे गिरिशंत त्वं यामिषुं बाणम् । हस्ते बिभर्षि । धारयसि । किं कर्तुम् । अस्तवे । असु क्षेपणे । तुमर्थे तवे प्रत्ययः । असितुम् । शत्रून् क्षेप्तुमित्यर्थः । हे गिरित्र गिरौ कैलासे स्थितो भूतानि त्रायत इति गिरिशत्रः । तां इषुं शिवां कल्याणकारिणीं कुरु । किञ्च । पुरुषं पुत्रपौत्रादिकं जगत् जंगममन्यदपि गवाश्वादिकं मा हिंसीः मा वधीः ॥ ३ ॥

**शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳसुमना असदिति ।** गिरौ कैलासे शेते गिरिशः । हे गिरिश शिवेन वचसा मङ्गलेन स्तुतिरूपेण वचनेन त्वा अच्छ । त्वा । प्राप्तुं वयं वदामसि । वदामः प्रार्थयामहे । अच्छाभेराप्तुमिति शाकपूणिरिति यास्कोक्तेः । संहितायां निपातस्य चेति दीर्घः । इदं तोमसि । किं वदाम इत्यत आह । नोऽस्माकं सर्वमित् । सर्वमेव जगत् जङ्गमं नरपश्वादि यथा येन प्रकारेण अयक्ष्मं निरोगं सुमनः शोभनमनस्कं असत् । भवति तथा कुर्विति शेषः । सुमनः शब्दे पुंस्त्वमार्षे

जगद्विशेषत्वात् । असदिसत्र लेटो डाट् विसट् । इलोपः ॥ ४ ॥

अध्यवोचदधिवक्ता: प्रथमो दैव्यो भिषक् अहीँश्च सर्वाञ्जम्भयत्सर्वाश्च यातुधान्यो धराचीः परासुवेति । रुद्रो मां अध्यवोचत् । अधिवक्तुम् । मां सर्वाधिकं वदतु तेनोक्ते मम सर्वाधिक्यं भवत्येवेत्यर्थः । कीदृशः अधिवक्ता । अधिकवदनशीलः । प्रथमः सर्वेषां मुख्यः पूज्यत्वात् । दैवेभ्यो हित । भिषक् । रोगनाशकः । स्मरणेनैव रोगनाशाद्भिषक्त्वम् । एवं परोक्षमुक्त्वा प्रत्यक्षमाह । हेरुद्र सर्वा यातुधान्यो यातुधानी राक्षसीः । त्वं परासुव पराक्षिप । अस्मतो दूरीकुरु । किं कुर्वन् । सर्वानहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन् । कीदृशीर्यातुधानीः । अधराचीः अधरे अधोदेशेऽचन्ति ताः अधराच्यः । ताः । अधोऽधो गमनशीलाः चौ समुच्चये । सर्पनाशराक्षसीक्षेपौ सहैव कुर्वीत्यर्थः ॥ ५ ॥

असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषाꣳहेड ईमहे इति । आदित्यरूपेणात्र रुद्रः स्तूयते । योऽसौ प्रत्यक्षो रुद्रो रविरूपः । च पुनर्ये रुद्रा एनमभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण सहस्रशोऽसंख्याः । एषां हेलः क्रोधमस्मदपराधजं वयं अवईमहे । निवारयामः । भक्त्या निराकुर्मः हेल इति क्रोधनाम । अभि सर्वतसोरिति द्वितीया । कीदृशोसौ । ताम्रः । उदयेऽस्त्यन्तं रक्तः । अरुणो रक्तोऽस्तकाले । उतापि च बभ्रुः पिंगलवर्णोन्यदा । सुमंगलः । शोभनानि मंगलानि यस्य मंगलरूपः । रव्युदये सर्वमंगलप्रवर्तनात् ॥ ६ ॥

असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मूलयातिन इति । योसावादित्यरूपोऽवसर्पति । उदयास्तमयौ कुर्वन्निरंतरं गच्छति । गोपाउत गोपाला अपि वेदोक्तसंस्काररहीनाः अदृश्रन् । पश्यन्ति । उदहार्यः । उदकं हरंति ताउदहार्यः । मंथौदनसक्तुबिंदुवज्रहारभारवीवधगाहेष्वित्युदकस्योदादेशः । जलहारिण्यो योषितोप्येनमदृश्रन् । पश्यंति । आगोपालांगनादिप्रसिद्ध इत्यर्थः । दृशोर्लुङि इरितो वेति च्लेरङ् । ऋदृशोऽङि गुणः छांदसः । कीदृशः । नीलग्रीवः । विषधारणेन नीला ग्रीवा कंठो यस्य । अस्तमये । नीलकंठ इव लक्ष्यः । विलोहितः । विशेषेण रक्तः । स रुद्रो दृष्टः सन् । नाऽस्मान्मृडं-

यति । सुखयतु । असौ मंडूलवतीरुद्र एव तपतीति ज्ञातः । सुखं करोत्वित्यर्थः ॥ ७ ॥

**नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो ये अस्य सत्वानो हंतेभ्यो करं नम इति ।**

नीलग्रीवाय नीलकंठाय नमोस्तु । नमस्कारो भवतु । कीदृशाय । सहस्राक्षाय । सहस्रमक्षीणि यस्य । इंद्रस्वरूपिणे । मीढुषे । मिमेहेति मीढ्वान् तस्मै । मिह सेचने । दाश्वान्साह्वान्मीढ्वांश्चेति क्वसंतो निपातः । सेक्के वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः । तरुणाय वा । अथो अपि वास्य रुद्रस्य ये सत्वानः प्राणिना भृत्योस्तेभ्योऽहं नमो नमस्कारं करोमि । कृन्न् कृतौ शप् । लङिउत्तमैकवचनम् ॥ ८ ॥

**प्रमुंच धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्चते हस्त इषवः पराता भगवो वपेति ।**

हेभगवः भगं षड्विधमैश्वर्यमस्यास्ति भगवान् । मतुवसोहः संबुद्धौ छंदसीतिरुत्वं । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णाँ भगइतीरणेत्युक्तेः । हेभगवन्तु रुद्र तव धन्वनो धनुषः उभयोरार्त्न्योर्द्वयोः कोट्योः स्थितां ज्यां मौर्वी त्वं प्रमुंच दूरीकुरु । यश्च ते तव हस्ते इषवो बाणास्ताइषूः परावप ॥ पराक्षिप ॥ ९ ॥

**विज्यं धनुः कपर्दिनो विशल्यो बाणवाऽनुत । अनेशन्नस्य या इषव आभुरस्य निषंगधिरिति ।** कपर्दो जटाजूटोऽस्यास्तीति कपर्दी रुद्रस्तस्य धनुर्विज्यं मौर्वीरहितमस्तु । विगता ज्या यस्य तत् । उतापिबाणवान् । बाणा अस्मिन् संतीति बाणवान् विशल्यो विफलोस्तु । बाणाग्रतो लोहभागः शल्यं । इषुधिर्निरग्रबाणोस्तु । अस्य रुद्रस्य या इषवस्ता अनेशन् । नश्यंतु । नशेरतएतमङिन्वेत्येत्वं । पुषादित्वात् च्लेरङ् । अस्य रुद्रस्य निषंगधिर्निषज्यत इति निषंगधिः खड्गः स धीयतेऽस्मिन्निति निषंगधिः । कोशः । स आभुः रिक्तः खड्गरहितोस्तु । रुद्रोऽस्मान्प्रति न्यस्तसर्वशस्त्रोस्त्वित्यर्थः ॥ १० ॥

**परिते धन्वनो हेतिरस्मान्वृणक्तु विश्वत । अथोयऽइषुधिस्तवारे अस्मन् निधेहितमिति ।**

हेरुद्र ते तव धन्वनो हेतिर्धनु सम्बन्धि आयुधं विश्वतः सर्वतो-

